सूर्यः खलु ᵛन ᵛमराति न म्रियते । ᵛनो ᵛवयं ᵛमराम । तदनुग्रहात्तत्रैव विषस्य योजितत्वात् वयमपि न म्रियामहै । उभयोरमरणे कारणमाह । ᵛहरिष्ठाः । हरयोऽश्वाः । तेषु स्थित आदित्यः ᵛआरे दूरे ᵛअस्य विषस्य ᵛयोजनं प्रापणं चकार । तदेवोच्यते । हे विष ᵛत्वा त्वां ᵛमधु अमृतं ᵛचकार । विषस्य विषभावं दूरेऽपनोद्य अमृतीचकारेति । एवैव ᵛमधुला मधुदात्री निर्विषीकर्त्री मधुविद्या । यदेतदादित्यस्य विषयोजनं तेन च अमृतीकरणं यदस्ति एषा मधुविद्या ॥ ॥ १५ ॥

इ॒य॒त्ति॒का श॑कुन्ति॒का स॒का ज॑घास ते वि॒षम् ।
सो चि॒न्नु न म॑राति॒ नो व॒यं म॑राम॒रे
अ॒स्य॒ योज॑नं ह॒रि॒ष्ठा मधु॑ त्वा मधुला च॑कार ॥ ११ ॥

इ॒य॒त्ति॒का । श॒कु॒न्ति॒का । स॒का । ज॒घा॒स॒ । ते॒ । वि॒षम् ।
सो इति॑ । चि॒त् । नु । न । म॒रा॒ति॒ । नो इति॑ । व॒यम् । म॒रा॒म॒ । आ॒रे ।
अ॒स्य॒ । योज॑नम् । ह॒रि॒ऽस्थाः । मधु॑ । त्वा॒ । म॒धु॒ला । च॒का॒र॒ ॥ ११ ॥

ᵛइयत्तिका इयत्तां कुर्वाणा इयत्तावती वा । बालेत्यर्थः । ᵛशकुन्तिका । शकुन्तः शकुनः । तस्य स्त्री । तां कपिञ्जलीमाहुः । ᵛसका सा ᵛते तव ᵛविषं ᵛजघास भक्षितवती । सा विषहर्त्रीति प्रसिद्धा । ᵛसो ᵛचित् ॥ सा उ इति निपातसमुदायः एकं पदम् ॥ सापि शकुन्तिका न म्रियते नित्यप्रतिपक्षत्वाद्विषस्य । शिष्टं व्याख्यातचरम् । अनेन विद्यायां यद्देहावृतं विषं तस्य शकुनेभ्यः आदित्याय च प्रदानमस्तीत्युक्तं भवति ॥

त्रिः स॒प्त वि॑ष्पुलि॒ङ्ग॒का वि॒षस्य॒ पुष्य॑मक्षन् ।
ता॒श्चि॒न्नु न म॑रन्ति॒ नो व॒यं म॑राम॒रे
अ॒स्य॒ योज॑नं ह॒रि॒ष्ठा मधु॑ त्वा मधुला च॑कार ॥ १२ ॥

त्रिः । स॒प्त । वि॒ष्पु॒लि॒ङ्ग॒काः । वि॒षस्य॑ । पुष्य॑म् । अ॒क्ष॒न् ।
ताः । चि॒त् । नु । न । म॒र॒न्ति॒ । नो इति॑ । व॒यम् । म॒रा॒म॒ । आ॒रे ।
अ॒स्य॒ । योज॑नम् । ह॒रि॒ऽस्थाः । मधु॑ । त्वा॒ । म॒धु॒ला । च॒का॒र॒ ॥ १२ ॥

ᵛत्रिः ᵛसप्त त्रिगुणिताः सप्तसंख्याकाः ᵛविष्पुलिङ्गकाः विविधाः विष्पुलिङ्गकाः । सप्तसु जिह्वासु लोहितशुक्लकृष्णभेदेन एकविंशतिर्यासां ताः । यद्वा । त्रिः सप्त एकविंशतिभेदा विष्पुलिङ्गकाः सूक्ष्मचटकिका विषप्रतिपक्षभूताः । ᵛविषस्य अस्मदावरकस्य ᵛपुष्यं पोषम् ᵛअक्षन् अदन्तु नाशयन्तु । ᵛताः च ᵛन ᵛमरन्ति न ᵛवयम् अपि । शिष्टमविशिष्टम् ॥

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १३ ॥

नवानाम् । नवतीनाम् । विषस्य । रोपुषीणाम् ।
सर्वासाम् । अग्रभम् । नाम । आरे । अस्य ।
योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १३ ॥

ᵛनवानां ᵛनवतीनां नवाधिकानां नवतिसंख्याकानां नदीनाम् । पुनः कीदृशीनाम् । ᵛविषस्य अस्मद्व्यापकस्य सर्वस्य विषस्य ᵛरोपुषीणां लोपयित्रीणां छेत्त्रीणाम् । ᵛसर्वासाम् उक्तानां गङ्गादिनदीनां ᵛनाम ᵛअग्रभं गृह्णामि संकीर्तयामि ॥ गृहेश्छान्दसे लुङि छान्दसः च्लेर्लुक् । 'हृग्रहोर्भः०' ॥ अस्य योजनमित्यादि गतम् ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः ।
तास्ते विषं वि जभ्रिर उदकं कुम्भिनीरिव ॥ १४ ॥

त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥ १४ ॥

ᵛत्रिः ᵛसप्त एकविंशतिसंख्याकाः ᵛमयूर्यः मयूरस्त्रियः । ता विषकारिसर्पद्वेषिण्यः इति प्रसिद्धाः नागद्वेषिगरुडपक्षादुत्पन्नत्वात् । तथा ᵛसप्त एतत्संख्याकाः सर्पणस्वभावाः ᵛस्वसारः स्वयमेव सरणाः ᵛअग्रुवः । नदीनामैतत् । सुरगङ्गाद्याः प्रसिद्धाः सप्त नद्यः सन्ति । ᵛतास्ते हे देह तव ᵛविषं ᵛवि ᵛजभ्रिरे विशेषेण हरन्तु । तत्र दृष्टान्तः । ᵛउदकं ᵛकुम्भिनीः कुम्भिन्यः कुम्भवत्यः कुम्भेन जलहारिण्यः ᵛइव । ता यथा तद्धरन्ति तद्वत् नद्यो मयूर्यश्च अतिप्रभूतं हरन्तु ॥

इयत्तकः कुषुम्भकस्तकं भिनद्म्यश्मना ।
ततो विषं प्र वावृते पराचीरनु संवतः ॥ १५ ॥

इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्मना ।
ततः । विषम् । प्र । ववृते । पराचीः । अनु । सम्ऽवतः ॥ १५ ॥

ᵛइयत्तकः कुत्सितेयत्तः अल्पप्रमाण इत्यर्थः । ᵛकुषुम्भकः कुं पृथ्वीं सुम्भति विलिखतीति सर्पाणां कुत्सितं सुम्भयिता निग्रहीता[1] कुषुम्भको नकुलः । स ते विषं हरत्विति शेषः । यदि न तथा स करोति ᵛतकं कुत्सितं तं नकुलम् ᵛअश्मना ᵛभिनद्मि विदारयामि । विषनिर्हरणप्रयोगे यावद्विषापगमं तं

१. झ-झ१–निग्रहीता वा ।

पाषाणानुवातमनुतिष्ठन्ति तद्विदः। तदिदमत्रोक्तम्। ᵛततः एवं प्रयोगे सति ᵛविषं ᵛप्र ᵛवावृते विषावृताद्देहात् विषं प्रवर्तते निर्गच्छतु। काः प्रति। उच्यते। ᵛपराचीः परागञ्चनवतीः अतिदूरगाः ᵛसंवतः संविभागवतो दिशः ᵛअनु लक्षीकृत्य दिगन्तं प्रति गच्छतु न मां प्रति गच्छत्वित्यर्थः॥

अध्यायोपाकरणोत्सर्गयोः 'कुषुम्भकस्तत्' इत्यन्त्या विनियुक्ता। 'दधिसक्तून्जुहोति' इत्युपक्रम्य 'कुषुम्भकस्तदब्रवीत्' (आश्व. गृ. ३. ५. ७) इति सूत्रितत्वात्॥

कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः।
वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम्॥ १६॥

कुषुम्भकः। तत्। अब्रवीत्। गिरेः। प्रऽवर्तमानकः।
वृश्चिकस्य। अरसम्। विषम्। अरसम्। वृश्चिक। ते। विषम्॥ १६॥

एवं महानुभावेन अगस्त्यमहर्षिणा उच्यमाने सति ᵛगिरेः सकाशात् ᵛप्रवर्तमानकः प्रवर्तमानः अतिशीघ्रमभिगच्छन् ᵛकुषुम्भकः नकुलः ᵛतदब्रवीत् तद्वाक्यमाचख्यौ। किं तदिति उच्यते। ᵛवृश्चिकस्य एतत् ᵛविषम् ᵛअरसम् असारं बाधकं न भवतीत्यर्थः। तथा लोकेऽपि सर्पदष्टमपि क्रिम्यादिदंशनमेव अतो न बाधः इति हि वदन्ति। एवमभिवचनेन सोऽपि निर्विषोऽभवत्। अथ तं वृश्चिकं प्रति नकुल आह। हे ᵛवृश्चिक ᵛते ᵛविषम् ᵛअरसम्। अतस्तमृपिं किं करिष्यति। तस्मात् परिहरेति। यदा एवमवादीत् तदाप्रभृति वृश्चिकविषम् असारमभवत्। एषा विषनिर्हरण्युपनिषत्॥ ॥ १६॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
द्वितीयाष्टके प्रथमे मण्डले
चतुर्विंशोऽनुवाकः
प्रथमं मण्डलं च॥

ॐ

# ऋग्वेदसंहिता

श्रीमत्सायणाचार्यविरचितभाष्यसमेता

## प्रथमं मण्डलम्

### प्रथमो भागः

# शुद्धिपत्रम्

पोडशपृष्ठपर्यन्तं केषुचित् स्थलेषु शव्द इत्यस्य स्थाने शद्व इति मुद्रणदोषात्संजातं तत् शुद्धीकृत्य वाचनीयम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | २० | इति करणबहुलम् | इतिकरणबहुलम् |
| १८ | ९ | °प्रसिद्धेपृग्वे° | °प्रसिद्धेष्वृग्वे° |
| २० | ३३ | अबोधकेत्वे° | अबोधकत्वे° |
| २४ | ३२ | °राहित्यान्न | °राहित्यान्नास्य |
| ३३ | ७ | आवहनीय° | आहवनीय° |
| ३४ | ७ | याञ्चा° | याच्ञा° |
| ,, | १८ | °नुमागेन | °नुमागमेन |
| ४० | ३ | °शब्देधाननाभिम° | °शब्देनाभिधानम° |
| ७८ | ७ | घिण्यतोः | घिष्ण्यतोः |
| ७९ | १० | स्यापः | क्यपः |
| ८८ | १६ | °ग्रहादीनाम् | °ग्रहादीनाम्' इति वचनात् |
| ९२ | १९ | अभ्यासत्य | अभ्यासस्य |
| ९७ | ७ | घिण्यतोः | घिष्ण्यतोः |
| १०१ | ७ | °द्युदात्वम् | °द्युदात्तत्वम् |
| १०२ | १० | दुष्परिहमि° | दुष्परिहरमि° |
| १०५ | २४ | सहस्त्रां | सहस्रसां |
| १०७ | ९ | ङित्त्वस्य प्राप्तस्य | प्राप्तस्य ङित्त्वस्य |
| ११० | १८ | गिवर्ण° | गिर्वण° |
| १२२ | १० | अस्मिम् | अस्मिन् |
| १४६ | २२ | निघातः | न निघातः |
| १५० | २५ | आर्द्ध्नोति | आर्द्ध्नोति |
| २०८ | १७ | मिथि | मथि |
| २१६ | १४ | घिण्यतोः | घिष्ण्यतोः |
| २४३ | ८ | गोसवीववधौ | गोसववीवधौ |
| २४५ | २९ | आतो लोपः | अतो लोपः |
| ३३६ | १२ | पाप्तिवांसः | पप्तिवांसः |
| ३७३ | ५ | °दश्यन्त्ये | °दशान्त्ये |
| ४२८ | ९ | द्विर्वचने | द्विवचने |
| ४३४ | ३२ | आडागमः | अडागमः |
| ४७३ | २० | उनन्- | उन- |
| ५१९ | २२ | °युक्तस्थाभा° | °युक्तरथाभा° |
| ५८५ | २८ | एकदेश° | क्ष-ट-स–एकदेश° |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१८ | १ | ᵛएत | ᵛएतत् |
| ६६२ | १७ | वीर्योत्पादकन् | वीर्योत्पादकान् |
| ६६२ | २३ | °परिष्ठादि° | °परिष्टादि° |
| ६६९ | १९ | नवींयाम् | नवींयान् |
| ६८६ | १९ | तुर्विर्तिम् | तुर्वीतिम् |
| ७१९ | १९ | °ढूलोपदीर्घाः | °ढलोपदीर्घाः |
| ७४९ | २० | 'अन्त्यावस्थाच्छन्दसि च' | अन्त्यावस्था । 'छन्दसि च' |
| ७५२ | २५ | मितद्र्वादिभ्य | मितद्र्वादिभ्य |
| ७८५ | २१ | उपमा | उपऽमा |
| ८३४ | ४ | अविना भूतम् | अविनाभूतम् |
| ८७३ | ११ | जुपर्नुम् | जुनुर्पम् |
| ९३६ | ३ | चतुर्भिः | चतुःऽभिः |
| ९४० | २३ | वंक्षद्विपदे | वंक्षद्द्विपदे |
| १०६१ | १३ | हर्वि° | हवि° |

---